# शमानशिक्षा

प्रणम्य प्रणताभीष्टप्रदातारं पतिं श्रियः
बह्वृचानां सुबोधाय शमानं क्रियते लघु

विसर्जनीय आकारपूर्वको घोषवत्परः
व्यञ्जनस्पृक् शसपरो लुप्यते संहितागमे

एषु वर्णक्रमात्तानि प्रवक्ष्यामि पदान्यहम्
इङ्ग्यं पृथक्पदं चात्र निमित्तत्वं पदस्य च

नानापदत्वमिङ्ग्यानां पूर्विभागस्त्ववग्रहः
निमित्तं गृह्यते यत्तत्पदमेवात्र लक्षणे

प्रथमांश्च द्वितीयांश्च हित्वा वर्ग्यास्त्रयस्त्रयः
अन्तस्थाश्च हकारश्च घोषवन्तः प्रकीर्तिताः

परिभाषा शमानस्य संग्रहेणैवमीरितम्
गजडाद्यास्त्रयो वर्णा दादयश्चैव बादयः
यादिवान्तो हकारश्च शसौ तावन्यसंयुतौ
इति परिभाषा

अजोषा अवा अस्या अयच्छथा अवाता अप्रा अप्सा अमित्रा
अपश्या अदृष्टा अयना अस्तभ्ना अन्यस्या अभ्रिया अस्मेरा

अपा अपृणा अगा अदधा अर्का अघ्न्याया अदब्धा अवीता अरिष्टा अमा अकवा अरेपा अग्रा अप्या अधृष्टा अन्तमा अवीरा असमना अज्ञाता अगोपा अनागा अयक्ष्मा अन्ता अनेना अनीका अरात्या अपवथा अजा अनूपा अपरस्या अक्रा अङ्गिरा अपुष्पा अरथा अनाधृष्या अस्थिथा अनूधा अप्सरा अजायथा यस्यानूनास्तस्थुरत्या जवेष्वसमा अपप्तन्नरुणाये मखा अमिता युवोरच्छिद्रास्समन्या ध्रुवं पर्ययास्सद्यन्वामरुषा ओजोऽमर्त्यास्समुद्रार्था ईं व्यक्ता अमीवा निः परोऽमृता नप्रियाधामानि पूर्वोऽश्वा नविनयशसा गिरो वातस्य परोऽर्णा नधीरापरोऽजुर्या नेव पूर्वोऽरिप्राहिन्वन्ति पर एकसप्ततिः १

आस्क्रा आहना आशुषाणा जा आर्या आदित्यानकृतमुताशाते पूर्व आयुधा इङ्ग्यान्तष्षट् २

इच्छमाना इन्वा इतरा इधाना इष्टा इषिरा दुस्पार्हाः परः प्रेषिता वीरा इयाना धानारुद्राय विशो बृहस्पतेर्हित्वां हित्वा जरित्रे या वां गिरो वाजयन्नारीर्गावो विश्वाः पर इमा हन् पूर्वश्च नव ३

ईराणा ईषमाणा न ईशानास्त्रयः ४

उषा उस्त्रिया उखाया उक्षमाणा उक्षिता उर्वश्या उहानाः
पीतये नक्षिद्यच्छतूग्राक्षितयन्ते क्षपोवस्त इदुस्रा नव ५

ऊमा ऊता ऊर्णा ऊर्ध्वा नद्यो भवन्ति परश्चत्वारि ६

ऋक्षा ऋभुक्षा ऋष्वा ऋज्रा वातपरश्चत्वारि ७

एकस्या एवाः क्षम्यहमिन्मह्यमेता विननिपरश्चैना
अनन्तोदात्तश्चत्वारि ८

ओजा ओका द्वे ९

ऐभिर्जगन्वान्द्यौर्वस्संवत्सरं गोमायुरत्यास्सूर्यस्येव
सुष्वाणासो विमृज्यमानः क्राणारुद्रा उपब्रह्माण्येतेषु
सर्वत्र नात्वानमसावृषात्रावावग्रहश्च नित्यं न व्यास्था इति
वर्जयित्वा स्थुस्थ भवन्तु परः सर्वत्र १०

किरणाः क्रीळाः केताः कुल्याः कुमाराः कनायाः काष्ठाया
दक्षिणातस्कपर्दा एषां कशास्सोमःकृता वाजीकाष्ठा सत्यं
क्षेमं कृण्वानाः काण्वायनाः कामा नदेवपूर्वः क्षाः क्षया
व्रताः क्षत्रियास्सप्तदश ११

गणा गोतमा गर्भा ग्रामा गृभ्णा गूर्ता ग्ना ग्वा गृभीता गभीरा नो गुह्या गा न दुः सुपूर्वो गोपा न मिथुना स्यातं मासो देवा परो गृणाना श्रवसे देवपरश्चतुर्दश १२

नुदन्तघोरा एका १३

चन्द्रमाश्चेताश्चक्षाश्चक्राणाश्चक्षाणा मतौ चनिष्ठाश्चित्रारोधस्वती र्यामेभिः परोऽश्वापश्चन्द्रा रिशादसः परश्च चक्रमाणा रिहन्ति परो नव १४

छिन्ना एका १५

जुष्टा जोषा जुगुर्या ज्ञेया जज्ञाना ज्याया जुह्वाना जीवा ज्या जेहमाना ज्ञा जिह्वाया जा जोहुवाना इन्द्रज्येष्ठा अग्निनसुजिह्वा जना न द्यापूर्वो मरुतो युगा गोभिर्देवेभ्यो महिना परो जाता जुषाणा यूयं पर एकोनविंशतिः १६

तिष्ठास्तृप्तास्तुस्तुवानास्तन्वानास्तस्थाना वरुणस्तुरा मातृ-दीर्घसुकृत्तमा ये गिरः परश्च तता न वसानं परस्त्या हरितो बृहतीः परोऽस्मान्त्स्वम्बयस्सुरुक्मे हितोको हिते वायो शुक्रः क्वस्वित्सम्यग्घयो ना गाव एषास्यान आपो हि मध्या यद्यदिमाभिगोत्राण्येतेषु ता नः कणूकपरश्च दश १७

द्रप्सा दध्या दमूना दत्ता दिष्टा दीना दुग्धा दस्मा दुध्रा दग्धा देष्णा अयने दूर्वा दधाना न यूयन्नियांगूढ्वी परो दा न वाजपूर्वो यन् गिरयश्च दृळ्हास्तमा दासाश्शश्रमाणा दोषा भवन्ति दर्शताः प्रयासिदुच्छुना घृतं दुहाना हूतिर्दैव्या दुघा न विश्वा जातयस्य परो दक्षा विनपरो दिव्या नवनपरो दाना स्मत्परो दीध्याना न प्रपूर्वो दुष्टरा यस्य परो देवा नोभापूर्वः एषो उषा अश्विना वर्तिस्तावामिन्द्रापर्वता प्रवोमित्रायकूष्ठः प्रनुयं युवमिमा उवां महे शुल्कायौत्यन्ता वान् दस्रा हीन्द्रसोममेतेषु देवा नाष्टाविंशतिः १८

धृषिता धारावरा धीरा धाया न धेना धा अनपपूर्वो धाना न विपूर्वो धारा न प्रच्युतः पूर्वो धिष्णया ये परो नव १९

नव्या नवेदा निदाया नीळा नग्ना उन्नीतास्सुनीथा हस्तेनर्या नवा नः परो नव २०

पतङ्गाः पर्जन्याः प्रजाः प्राः पापाः पन्थाः पुनानाः पृश्न्याः पृतनाः पर्वताः पाजाः पार्याः प्रयाः प्रस्रवणाः पवमानाः पज्रायाः पिन्वानाः पूताः पेशाः प्रावेपाः परस्याः प्रसूताः प्रशिष्टाः प्रावृताः पत्ना वरेण्यो रयीणां प्रिया अस्यपादा इन्द्रस्य प्रेष्ठा ग्वाजायेमहि सोमायन्भिरवदन् किल प्रथमा धेनवः पिन्वमाना जग्मिरे रोदसी पथ्यास्सन्तिपुत्रा

माप्रपीताः शतपवित्रा ओषधीः पूर्वाः पार्थिवा ये परः पा नाक्रविहास्ता प्रमित्रयोर्यातमेतेषु पृथिव्या न को अस्येमां मेवातस्येत्येतेषु पर्णा निमधुवाचं पर एकोनचत्वारिंशत् २१

फाला एका २२

बर्हा ब्राह्मणा बुबुधाना बुधाना बद्बधाना बीभिषथाष्षट् २३

भिक्षमाणा भामा भरा भरता भिन्दाना भ्रमा भोजा बृहद्भा भृता येषु परस्त्वया वयं यदक्रन्दोऽबुध्नमुत्य एतेषु भद्रा दश २४

मूरास्सुमेधा मृगा म्रदा मोदमाना मदा मन्द्रा मर्ता मृज्यमाना मित्रा मर्या मृथा मदिता मन्वाना वध्रिमत्या वां भूमयो मन्यमाना न मासाः सगोमघा अच्छशुचयो मनीषा विन्मिमाना भरन्मानुषास्तेमरुतो मन्दसाना मथ्रा नेमिं परो मना इङ्ग्यान्तो मनुष्या न युगानि परो माया न माययापूर्वः षड्विंशतिः २५

यजत्रा यस्या यतमाना यजमाना युजाना यज्ञिया योधया यूया यात्या यक्ष्मास्त्वेष यामा आरोहत्सु यमा यज्ञा अनिङ्ग्यान्तो युता यत्परो युक्ता न

मातारथेनवह्निः परः क्षत्रायोदीर्ध्वं सुरुक्मे हित्वं नोगोपान
दक्षिणाञ्जन्तित्वामयं सो अग्निर्भूयामोषुवायोशुक्रस्तं प्रत्नथा
भात्यग्निरागावस्सुसन्दृक्के सुमद्रज्येष्ठाः कुविदङ्गपिबा
सुतस्येमानि वां वज्रेण घर्मा समन्तामयो भूरभीवर्तेन
प्रनूनमेतेषु याः प्रमेयदिन्द्राग्नी एतयोर्द्वितीयया ऋणपूर्वश्च
षोडश २६

रेषणा रेता रभिष्ठा रंहा रणा ररीथा रेजमाना रक्षमाणास्सुरुक्
माश्शुचन्नविद्युत्त्वासुरथाः पितोरसा स्वानिनो रुद्रिया देवो
रोचमाना ऋतौरणवा रुद्रा न वर्तियुवन्तेपूर्व एकयास्सरूपा
स्थातुर्घृतस्य दिवः परश्च षोडश २७

लोका एका २८

वसाना वर्चा विष्पुलिङ्गका वच्यमाना वल्शा विवस्वत्या
वर्धमाना वरत्रा वाजा वया वृजना वसिष्ठा विक्ता व्रा
वेना विश्वस्या वचा वासा वशा वृकाश्शातव्रजाः प्रवाता
वृणाना न विपरो विप्रा न श्रयेतामसमानीयं वन्ता पूर्वो
विदा न चकृमपूर्व इङ्ग्यान्तश्च वीरा न विट्सु पूर्वो
वावशाना अनभिपूर्वो व्यचा न वरिमता परो वारा होतारो
यतमानाः परो वृता द्वारः परो वेदा न सुपूर्वो वीता
महत्परो वक्वा ध्वस्राः परो योहिमाया भुवो विस्पृधो

मतीर्धियो नियतो नमन्त यदजयो मृधः परो विश्वा नेन्द्रः पूर्वश्चतुस्त्रिंशत् २९

शुष्माश्शविष्ठा श्रवा श्रीताः शिप्राश्शोका श्रायाश्शाकाश्श याश्शोभिष्ठाश्शिशूलाश्शपथा श्रथ्नास्तमास्सोमास्तव शुक्रा गृभ्नातिविश्रिता मा श्यावाः कविशस्तास्त्रिशतास्सुशंसा ऊर्मिश्शाम्याश्शूरा न मंहिष्ठापरश्शिवा न नः परश्शुभ्रा न यातं विश्वनपरस्त्रयोविंशतिः ३०

सौधन्वनास्सेना स्तोकास्सिंहास्स्नास्सर्गास्सुसंशितास्सोमा स्वा स्तोमास्सुवाना स्वना निषत्तास्सस्त्रास्सूर्यायास्सूभर्वा स्सुरायाः प्रसूनृता नरः प्रस्पन्द्रा नभिस्थिरा भवन्तु तास्त्वा सर्वाश्च स्या अद्रुहो नो मनीषा स्पार्हास्सृष्टा देवपर स्था न प्रति घर्म्ये पूर्वस्सध्रीचीना निपर स्तोम्या न भूत्परस्सत्या न सन्ति चाकूतिर्युयुधुः पूर्वस्सुता स्तुतास्सहा इत्येते अनिङ्ग्यान्तस्सा इङ्ग्यान्तस्त्रयस्त्रिंशत् ३१

हिमा हवमाना हूयमाना हिन्वाना हर्या हुवाना ह्वृता हाया हेत्या वीरहव्याश्च हा दीयद्रश्मानो हिरण्यया विहोत्रा हिता अनिङ्ग्यान्तो वृष्णो नमसा वातापर्जन्यापरो हस्ताः पञ्चदश ३२

इति शमानशिक्षामूलं समाप्तम्